

SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:9, Issue: 12
March-2023, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

मार्च् २०२३

## श्रीरामरक्षा सर्वजगद्रक्षा

तिरुपतिस्थ श्रीकोदण्डरामस्वामिनः
वार्षिकब्रह्मोत्सवः
(२०२३ मार्च् २० तः २८ पर्यन्तम्)















## श्री बालाजी दिव्याङ्गनां शस्त्रचिकित्सा, परिशोधना पुनरावासकेन्द्रम् (बर्ड्)

पोलियो मेल्लिटस्, सेरिब्रल् पाल्सी जन्मतः आगमयमानाः रुग्णताः चिकित्सितुं मेरुदण्डास्थि सम्बद्ध व्रणैः पीड्यमानेभ्यः अस्थि सम्बन्धित अङ्गवैकल्येभ्यः रोगिभ्यः परिपूर्णरीत्या निश्शुल्कं सेवां प्रदातुम् अत्याधुनिक वैद्यपरिकरैः बर्ड् केन्द्रं संस्थापिता वर्तते। एतां संस्थां मानवतादृक्पथेन भवन्तः सहायसहकाराः दान रूपेण समर्पयन्तु। मानवसेवा एव माधवसेवा।

करादिकरणं (टाक्स्) ८०(जि) अधिनयमानुसारं आदाय करोपश्मः प्रदीयते।

कार्यनिर्वहणाधिकारी, ति.ति.दे., नाम्ना डिमाण्ड् ड्राफ्ट्, चेक्कु रूपेण प्रेषयितुं सङ्केतः

उप कार्यनिर्वहणाधिकारी (दातृ विभागः)
केन्द्रीकृतदाता निर्वहण सेल् आदिशेषु विश्रान्ति भवनम्।
कार्यनिर्वहणाधिकारी, क्यांपु कार्यालयस्य पार्श्वे, तिरुमला
(अथवा)
दि. डैरेक्टर् बर्ड् ट्रस्ट् ति.ति.देवस्थानानि, तिरुपति - ५१७ ५०१.
चरवाणी - ०८७७-२२६४०२५, ०८७७-२२६४६१९

Website : www.tirumala.org,
e-mail : officebirrd@gmail.com
Mobile App: BIRRD HOSPITAL




# गीतामृतम्

अर्जुन उवाच -

कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन।।

(भगवद्गीता २ -४)

भावः - हे मधुसूदन! अहं युद्धरङ्गे
भीष्मद्रोणादि महा पुरुषान् बाणैः कथं प्रहर्तुं
शक्नोमि इति अर्जुनः अवदत्।

# सङ्कीर्तनम्



तथा कुरुष्व मुदामामद्येव
अधोक्षजस्ते अनुदासोहम् ।।तथा।।
तवास्मि शरणं दहराहं
भवदुरितानि भञ्ज मम
भुवि कृतं च या पुरा प्रतिज्ञां
जवन ददामि सर्वेभ्य इति ।।तथा।।
व्रजामि शरणं वरद तवाहं
त्यजितानुबन्धधर्मं मम
भुजकृतां पुरा प्रतिज्ञाम्
वृजिनैर्मोक्षयिष्यामीति ।।तथा।।
चिन्तितं मया श्रीवेङ्कटेश
किन्तु त्वं मयि कृपां कुरु
तन्तु हि पुराकृतं प्रतिज्ञाम्
अन्तगतिं नयामीति महि ।।तथा।।

(अन्नमाचार्यसङ्कीर्तनम्)



सम्पादकीयम्

# परिपूर्णतायाः अपरं नाम स्त्री

उपाध्यायान् दशाचार्य आचार्याणां शतं पिता।
सहस्रं तु पितॄन् माता गौरवेणाचरिच्यते।।

''दश उपाध्यायेभ्यः एकः आचार्यः शत आचार्येभ्यः पिता, सहस्रात् पितृभ्यः माता अधिका वन्दनीया च'' इति मनुधर्म शास्त्र वचनम्। विश्वे यः कोऽपि देशः अपि स्त्रीणां न दत्तः समुचित स्थानः परम् अस्माकं भारतदेशः दत्तः। भारतदेशः स्त्रीमूर्तिं देवतावत् मातावत्, भगिनीवत्, गृहिणीवत्, सहधर्मचारिणीवत् आद्रियते। इत्युक्ते करुणया लालित्यं, कर्तव्य दीक्षया पालनं, माता इव पोषणं, धर्मपत्नी रूपेण पोषणं सर्वं केवलं स्त्री एव करोति। तदर्थमेव जगत् सृष्टिः सर्वा तस्याः आधीने एव भवति। त्वत्कळा सर्वयोषिताः इति इन्द्रः जगन्मातरं कीर्तितवान्।

स्त्रियः कुटुम्ब निर्वहणे प्रधानपात्रं वहन्ति। यज्ञयागादि क्रतून् अपि पत्नीं विना पतिः कर्तुं नशक्नोति इति शास्त्रवचनम्। तदर्थमेव रामायणे उत्तरकाण्डेपि रामः अश्वमेधयागे स्वर्णसीताप्रतिमां स्थापयित्वा यज्ञं कृतवान्। जगन्मातृरूपेण स्त्रियः आदरितवन्तः अस्माकं ऋषयः। यत्र महिळानां सम्मानं न भवति तत्र विनाशः एव भवति। अस्माकं साहित्ये द्वौ इतिहासौ स्तः। रामायणं, महाभारतम् इति। द्वयोपि इतिहासयोः पश्यामः चेत् रावणासुरः स्त्री सम्मानं न कृत्वा सीतापहरणं कृतवान्। तेन कारणेन कुलविहीनः अभवत्। महाभारते दुर्योधनः द्रौपद्यानाम् उपरि एतदेव कृत्वा स्वकुलस्य नाशनाय कारकः अभवत्।

सृष्टेः मूलाधार शक्तिः स्त्री एव। **यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।** मानवस्य धर्ममार्ग जीवनाय विष्णु तत्त्वं सङ्केतः। इहपरसुखाय मोक्ष प्राप्तेः अपि सङ्केतः एतदेव। अष्टलक्ष्मीणां समाहारः एव महालक्ष्मीः। तस्याः स्वस्य हृदये स्थानं दत्वा लोकसन्देशं दत्तवान् श्रीमहाविष्णुः। परा, पश्यन्ती, मध्यमा, वैखरी इति वाचः चत्वारि रूपाणि भवन्ति। ब्रह्मा तस्य चतुर्मुखेषु तानि रूपाणि संस्थाप्य विश्वस्य क्षेमं कामयामास। स्वीय पत्नीं वागधीश्वरीरूपेण सम्भावयन्तु इत्यपि आदिदेश। महाकवि काळिदासोऽपि स्वीय प्रसिद्ध रघुवंश महाकाव्ये मङ्गळाचरणे एव ''जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ'' इति वदन् अर्धनारीश्वरतत्त्वस्य प्राभवं प्रकटितवान्। एवं त्रिमूर्तयः ब्रह्मविष्णुमहेश्वराः स्त्रियं न केवलं जीवनभागस्वामिनी रूपेण, अपि च मनोवाक्कायरूपेणापि निरूपितवन्तः। चतुर्विध पुरुषार्थेषु अन्यतमः कामः यदि धर्मेण बद्धः चेत् स तु भगवद्स्वारूप्यं प्राप्नोति इति श्रीकृष्णः भगवद्गीतायाम् स्पष्टीचकार।

अधुनातन समाजः स्त्रियम् अन्यथा भावयन् आटविक रूपेण प्रावर्तते। एवम् ये आचरन्तः सन्ति तेषाम् उपरि अत्यन्त काठिन्य दण्डनानि दीयन्ते चेदपि न दोषो विद्यते इति मनुस्मृतौ स्पष्टीकृतम्। समस्त भारतं स्त्रियं न केवलं एका सबला रूपेण परं समाजस्य स्फूर्तिदात्री इति मन्यते, तादृशीं स्त्रीं भक्ति भावेन स्वीय सहोदरी अथवा मातृ रूपेण भावनीया।

।। न मातुः परदेवतम्।।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका
आध्यत्मिकसचित्रमासपत्रिका

# मार्च् २०२३

सम्पुटिः-०९ सञ्चिका-१२

श्रीशुभकृत्संवत्सरस्य फल्गुणशुक्लदशमी तः
श्रीशुभकृत्संवत्सरस्य चैत्रशुक्लदशमीपर्यन्तम् - १९४४



गौरवसम्पादकः-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः,
ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

**मुखचित्रम् –** श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः, तिरुपतिः।
**अन्तिमरक्षापुटः –** श्रीवेदनारायणस्वामिनः प्लवोत्सवः, नागुलापुरम्।



## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

# युगादि

- श्री आर्.अनन्तकृष्ण शर्मा
चरवाणी - ८९७८५८७७५१



प्रतिसंवत्सरं चैत्रमास शुक्लपक्ष प्रतिपदि युगादि महोत्सवः प्रचलति। एष महोत्सवः भविष्यपुराणोत्तरभागे, ब्रह्मपुराणे, धर्मसिन्धौ निर्णयसिन्धौ अभिवर्णितः भवति। तस्मिन् दिने महोत्सवस्य आचरणेन पञ्चाङ्गश्रवणेन च जनेषु भक्तिभावः परिकल्प्यते।

आन्ध्रदेशीयानां, अयं प्रसिद्धः उत्सवः वर्तते। अयमेव संवत्सरादिरिति व्यवह्रियते। प्रतिसंवत्सरं चैत्रशुद्धप्रतिपत् दिने अयमुत्सवः प्रचलति। एष एव सर्वेषु उत्सवेषु आद्यः इति ज्ञायते। अस्मिन् दिने सार्ववर्णिकाः जनाः अभ्यंगनस्नानं कृत्वा नूतन वस्त्राभरणानि धरन्ति। अनन्तरं यजमानः पुत्र मित्र कलत्र समेतः पूजामन्दिरे देवता प्रतिमानां अथवा चित्रपटानां समीपे उपविश्य नूतन पञ्चाङ्गं हरिद्रा कुंकुमादिभिः अलङ्कृत्य पीठे निक्षिप्य पत्र पुष्पफलाक्षतैः इष्टदेवता पूजनं करोति। ततः युगादि चोष्यं (लेह्यं) सज्ञीकृत्य भगवन्निवेदनं कृत्वा सर्वे प्रसादरूपेण स्वीकुर्युः

## युगादि वैशिष्ट्यम् -

**यद्वर्षादौ निम्बसुमं शर्कराम्ल घृतैर्युतम्।**
**भक्षितं पूर्वयामेस्यात्तद्वर्षं सौख्यदायकम्।।**

**श्रीकल्याणगुणावहं रिपुहरं दुःस्वप्न दोषापहं**
**गङ्गास्नानविशेष पुण्यफलदं गोदानतुल्यं नृणाम्।**
**आयुर्वृद्धिदमुत्तमं शुचिकरं सन्तान सम्पत्प्रदं**
**नानाकर्मसु साधनं समुचितं पञ्चाङ्गमाकर्ण्यताम्।।**

उपर्युक्त श्लोकानुसारं तत्र युगादि चोष्ये निम्बकुसुमं, गुडं तिन्त्रिणीफलं घृतं च उपयुज्यन्ते, परन्तु प्रान्तीय आचार मनुसृत्य चूतफलं, नारिकेल शकलानि, कृष्णमरीचिका अपि पदार्थाः सम्मिलिताः भवन्ति। अनन्तरं भक्ष्यभोज्य चोष्य लेह्य सम्मिलितं अन्नं सज्ञीकृत्य भगवन्निवेदनं कृत्वा मित्रैः कुटुम्बसभ्यैः सह भुञ्जीयात्। सायंकाले देवालयं गत्वा अर्चक सकाशात् अथवा पण्डित सकाशात्, ज्योतिष शास्त्ररीत्या राष्ट्रस्य, देशस्य संवत्सरफलं सर्वेजनाः स्वस्व नक्षत्राणि अनसृत्य राशिफलञ्च जानीयुः। अनन्तरं तेषां सत्कारं कुर्युः। नूतन संवत्सर प्रारम्भे प्रकृतिः विविध पत्रफलपुष्पैः शोभायमाना परिपुष्टा च भवति। पञ्चाङ्ग श्रवणेन तस्मिन् वत्सरे श्रौतस्मार्तादि कर्माणि व्रतोत्सवाश्चौ कदा अनुष्ठेयाः इति कालविशेषाः ज्ञातुं शक्यन्ते।



पूर्वकाले जनाः युगादि उत्सवं आचरन्तिस्मेति भविष्यपुराणोत्तरभागे कथनात् ज्ञायते। श्रीकृष्णः धर्मराजं प्रति एवमुवाच। युगादिः कृतयुगे वैशाखमास शुक्ल तृतीयायां, त्रेतायुगे कार्तिक शुक्लनवम्यां द्वापरयुगे नभसि त्रयोदश्यां कलियुगे माघमासे पूर्णिमायाम् आरब्धः इति कथ्यते। एताः अर्थात् ब्रह्मदेवः चैत्रशुद्ध प्रतिपत्तिथौ जगत् सृष्टिं प्रारब्धवानिति अवगम्यते। पण्डित भवानी प्रसादस्य ग्रन्थात् इदम् अवगम्यते यत् एष उत्सवः पारशीकाणामपि संवत्सरादिः आसीदिति प्राचीनवेदकाले आर्याः पार्शीकाः सहजीवनं कुर्वन्तिस्म इत्यपि सूच्यते। ततः भवानी प्रसादस्य अभिप्राये एष महोत्सवः पूर्वं भारतदेशे सर्वत्र प्राचलत् इति ज्ञायते। अनन्तरं चान्द्र सौरमान भेदावनुसृत्य दक्षिण देशे चैत्रमासे उत्तरदेशे मेष सङ्क्रमण दिने एष महोत्सवः जनैः अनुष्ठितः दृश्यते। पार्शी भाषायां युगादि महोत्सवः ''नौरोज्' (नूतन दिनं) इति व्यवह्रियते। पार्शीकानां साधारणतया एष उत्सवः मार्चिमासे प्रचलति अर्थात् वसन्तऋतौ चैत्रमासे अस्माकं युगादि महोत्सव काले एवं तेषामपि नौरोज् उत्सवः प्रचलति। ज्योतिषशास्त्ररीत्या शालिवाहनशकम् अनुसरन्तः जनाः इमम् उत्सवम् आचरन्ति। ''युगादयश्च कथ्यन्ते तथैताः सर्व सूरिभिः। कलियुगः माघपूर्णिमायां आरब्ध इति उपर्युक्त पुराणवचनं अस्माकं न प्रमाणं, कुत इति चेत् अस्माकं युगादिः चैत्रमास प्रारम्भे प्रचलति धर्म सिन्धुकारः निर्णयसिन्धु-कारश्च युगादि पर्वदिनं संवत्सरारम्भे अनुष्ठीयमानः उत्सव इति निर्णीतवन्तौ। धर्मसिन्धुकारः विशेषेण एवमाह ''अत्र शुक्लप्रतिपदादिः अमान्त एवमासः प्रायेण दाक्षिणात्यै राद्रियते। धर्मसिन्धुकारः जनैः युगादि पर्वदिने अनुष्ठेयानि कर्माणि एवमाह। युगादि पर्वदिने एव पूर्वकाले ब्रह्मदेवः नूतनां सृष्टिम् आरब्धवान् तस्मिन्नेव दिने ब्रह्मदेवः देवान् तत्तत् कार्येषु नियुक्तवान्। तदारभ्य नूतनसंवत्सरादिः प्रचलति इति ब्रह्माण्डपुराणे उक्तम्। युगादि पर्वदिने एव जनाः नूतनान् व्यापारान् विद्या, उद्योग, गृहसम्बन्ध कार्याणि च आरभन्तेस्म ऐश्वर्य, विजयं कीर्ति च अलभन्त।







सर्वेभ्यः 'सप्तगिरि'
पाठकेभ्यः कर्तृकेभ्यः,
कविभ्यः
**श्रीशोभकृत् युगादि**
**नूतनवर्ष हार्दाः शुभाशयाः।**

- प्रधानसम्पादकः



# श्रीरामनवमी वैशिष्ट्यम्

- वै.दामोदरम्मा
चरवाणी - ९८४९००५९९७



श्रीरामनवमी पर्वदिनं कदा आचरणीयम् : - श्रीरामः वसन्तऋतौ चैत्रशुद्धनवम्यां, पुनर्वसुनक्षत्रे कर्काटकलग्ने, अभिजित् मुहूर्तौ मध्याह्ने १२वादन समये त्रेतायुगे जातः। तेषां जन्मदिनं प्रजाः श्रीरामनवमी पर्वदिनवत् आचरन्ति। चतुर्दशवर्षाणि अरण्यवासम् अनुभूय रावणसंहारं कृत्वा अनन्तरं श्रीरामः सीतासमेतः अयोध्यायां पट्टाभिषिक्तः अभवत्। एतत् शुभसमयः अपि चैत्रशुद्धनवम्यामेव प्रचलितः इति मानवानां विश्वासः। श्रीसीतारामकल्याणमपि अस्मिन्नेव दिने प्रचलितम्। अस्मिन् दिने भद्राचलपुण्यक्षेत्रे श्रीसीताराम कल्याणं वैभवोपेततया प्रचलति। अनन्तरं पौर्णम्यां ओण्टिमिट्ट क्षेत्रे श्रीसीतारामकल्याणं अत्यन्त वैभवोपेततया तिरुमलतिरुपति देवस्थानं निर्वहति।

राम इति नाम रमयति इत्यर्थः। अतः वयं सर्वदा अस्माकं हृदयकमले स्थितं रामं स्मरामः। एकदा पार्वतीदेवी परमेश्वरं "केनोपायेन लघुना विष्णोर्नाम सहस्रकम्" नाम विष्णुसहस्रनाम स्तोत्रस्य सूक्ष्ममार्गं वदन्तु इति पृष्टवती।

तदा परमेश्वरः "हे पार्वतिः अहं निरन्तरं तस्य फलस्य कृते अमुं श्लोकम् एव जपं करोमि इति उक्त्वा एतस्य श्लोकस्य उपदेशं कृतवान् -

श्लोः - श्रीरामरामरामेति रमे रामे मनोरमे।
सहस्रनामतत्तुल्यं रामनाम वरानने।।

एतस्य श्लोकस्य त्रिवारस्मरणेन केवलं विष्णुसहस्रनाम फलमेव। साक्षात् श्रीहरिः एव कौसल्यापुत्र रूपेण एतस्यां भूमौ जन्म प्राप्तः। एषः एव दिनः वयं श्रीरामनवमी पर्वदिनमिव प्रचालयिष्यामः।

ये भक्ताः काश्यां वसित्वा तस्मिन् पुण्यक्षेत्रे मरणं प्राप्नुवन्ति, तेषां मरणसमये ते शङ्करः एव तारकमन्त्रं तेषां दक्षिणकर्णे उक्त्वा तेषां सद्गतिं यच्छति इति भक्तानां अत्यन्त विश्वासः। भक्तरामदासः सर्वदा श्रीरामनामगानमाधुर्यं भक्त्या संसेव्य, कदली, खर्जूरादि फलानामपि श्रीरामनामं मधुरमिति कीतितवान्। रामनामोच्चारणे 'रा' इत्यक्षरं उच्चार्यते चेत् अस्माकं मुखं उद्घाटितं भवति। तथा अन्तः स्थितानि पापानि सर्वाण्यपि बहिरागत्य रामनामाग्निज्वालायां पतित्वा दग्धानि

भवन्ति इति, तथैव 'म' इति अक्षर उच्चारणेन अस्माकं मुखं पिदितः भवति, तथा बहिः स्थितानि पापानि अन्तः न प्रविशन्ति इति। अतः एव मानवानां रामनाम स्मरणं अत्यन्त ज्ञानं जन्मराहित्यं प्रसादयति। ''रामो विग्रहवान् धर्मः'' इति आर्योक्ति प्रकारेण रामस्य मूर्तिः अस्माकम् अत्यन्त धर्मप्रबोधकं भवति।



**नेत्रोत्सवकल्याणम् -**

श्रीरामनवमी पर्वदिने अत्यन्त वैभवेन सीतारामकल्याणं प्रचलति। आलय पण्डिताः सीतारामकल्याणं निर्वहन्ति। कल्याणं भक्ताः अधिकसंख्यया आगच्छन्ति। अस्मिन् दिने प्रसादरूपेण पानकं यच्छन्ति। तत् सर्वेषां प्रीतिपात्रं भवति। देवालयान् अत्यन्त सुन्दरतया पुष्पैः विद्युद्दीपैः अलङ्कुर्वन्ति। रामायणपारायणम् अपि कुर्वन्ति। श्रीरामेण सह सीतां, लक्ष्मणम्, आञ्जनेयमपि आराधयन्ति।

भद्राचलपुण्यक्षेत्रे रामदासेन निर्मिते आलये प्रतिवर्षं श्रीरामनवमी पर्वदिनं वैभवेन करिष्यन्ति। तेलङ्गाणा प्रभुत्वस्य मान्यः मुख्यमन्त्रिवर्याः नूतनवस्त्राणि, मुक्ताफलानि कल्याणार्थम् आनयन्ति। ओंटिमिट्ट पुण्यक्षेत्रे अपि पूर्णिमायां कल्याणं प्रचलति। तदर्थम् आन्ध्रप्रदेश् मुख्यमन्त्रिवर्याः नूतनवस्त्राणि, मुक्ताफलानि आनयन्ति।

एतान् उत्सवान् द्रष्टुम् उभय आन्ध्रराष्ट्र जनाः अत्यन्त भक्त्या देवालयान् प्रति गच्छन्ति।

## जनवरि
### २०२३
### लघुप्रश्नोत्तरी
### समाधानानि



१. श्रीमद्भागवतम्
२. महर्षि नारद
३. श्री शुकमहर्षिणा
४. सप्त दिनानि
५. १८,००० श्लोकाः
६. स्कन्दानि
७. १२
८. गङ्गानदीतीरे विद्यमान देवप्रयागे
९. अभिमन्युः
१०. उत्तरा देवी
११. श्रीकृष्णः
१२. दशम स्कन्दे
१३. देवकी वसुदेवौ
१४. यशोदानन्दगोपौ
१५. यदु वंशे

नीतिकथा

# अहह आः च



अजीजः सरलः परिश्रमी च आसीत्। सः स्वामिनः एव सेवायां लीनः आसीत्। एकदा सः गृहं गन्तुम् अवकाशं वाञ्छति। स्वामी चतुरः आसीत्। सः चिन्तयति - 'अजीजः इव न कोऽपि अन्यः कार्यकुशलः। एष अवकाशस्य अपि वेतनं ग्रहीष्यति'। एवं चिन्तयित्वा स्वामी कथयति - 'अहं तुभ्यम् अवकाशस्य वेतनस्य च सर्वं धनं दास्यामि।' परम् एतदर्थं त्वं वस्तुद्वयम् आनय -- 'अहह!' 'आः!' च इति।

एतत् श्रुत्वा अजीजः वस्तुद्वयम् आनेतुं निर्गच्छति। सः इतस्ततः परिभ्रमति। जनान् पृच्छति। आकाशं पश्यति। धरां प्रार्थयति।परं सफलतां नैव प्राप्नोति। चिन्तयति, परिश्रमस्य धनं सः नैव प्राप्स्यति। कुत्रचित् एका वृद्धा मिलति। सः तां सर्वां व्यथां श्रावयति। सा विचारयति - 'स्वामी अजीजाय धनं दातुं न इच्छति। सा तं कथयति - 'अहं तुभ्यं वस्तुद्वयं ददामि।' परं द्वयम् एव बहुमूल्यकं वर्तते। प्रसन्नः सः स्वामिनः समीपे आगच्छति।

अजीजं दृष्ट्वा स्वामी चकितः भवति। स्वामी शनैः शनैः पेटिकाम् उद्घाटयति। पेटिकायां लघुपात्रद्वयम् आसीत्। प्रथमं सः एकं लघुपात्रम् उद्घाटयति। सहसा एका मधुमक्षिका निर्गच्छति। तस्य च हस्तं दशति। स्वामी उच्चैः वदति- 'अहह! द्वितीयं लघुपात्रम् उद्घाटयति। एका अन्या मक्षिका निर्गच्छति। सः ललाटे दशति। पीडितः सः अत्युच्चैः चीत्करोति - 'आः' इति।

अजीजः सफलः आसीत्। स्वामी तस्मै अवकाशस्य वेतनस्य च पूर्णं धनं ददाति।

# श्रीरामचन्द्रचरणौ शरणं प्रपद्ये।



समस्त सद्गुणावान् सच्छील चारित्रः समस्तलोकानाम् आराध्यभूतः आभारतं सर्वत्र पूजनीयः श्रीरामचन्द्रः। अस्माकं देशे समस्त प्रान्तीयानां श्रीरामचन्द्रस्य आलयाः सर्वत्र अस्माभिः दृश्यमानाः वर्तन्ते। वस्तुतः श्रीरामचन्द्रस्य जन्मभूमिः अयोध्यापुरमिति सर्वैः विदितमेव। अपि च तस्य पादस्पर्शेण अस्माकम् आन्ध्रदेशमपि पवित्रः इति रामायणात् अस्माभिः ज्ञायते। सीतान्वेषण समये श्रीरामः अत्रैव अधिकतया वने अटित्वा, सुग्रीवादीन् स्नेह भावेन मिलित्वा तेषां साहाय्येन रावणसंहारं कृत्वा पुनः अयोध्यां प्रति आजगाम इति अस्माभिः कथारूपेण श्रूयते। तां कथाम् आधारीकृत्य आन्ध्रदेशे अपि श्रीरामचन्द्रस्य महान्ति वैशिष्ट्य पूर्ण दर्शनीय क्षेत्राणि वर्तन्ते इति, तादृश क्षेत्रेषु कलियुगभूवैकुण्ठमिति सुप्रसिद्धेन नाम्ना विराजमान क्षेत्रं तिरुमलक्षेत्रमपि एकमिति अस्मिन् श्रीरामनवमी सन्दर्भे तादृश विशिष्ट क्षेत्राणां दर्शनं स्मरणम् अपि अत्यन्त पुण्यदायकं भवति।



## श्रीराममेडा तिरुमला

कलियुग प्रत्यक्षदैवेन श्रीवेङ्कटेश्वरेण विराजमाने तिरुमलक्षेत्रे आनन्दनिलये मणिमण्टपं, स्नपन मण्टपं तदनन्तरं विद्यमान मण्टपमेव श्रीराममेडा इति। तत्र त्रेतायुगसमये विराजमान श्रीसीतारामलक्ष्मण सहित उत्सव मूर्तयः, तैः सह अनन्त, गरुड, विष्वक्सेन मूर्तयः तथैव रामभक्तेषु अग्रगण्याः हनुमत्, सुग्रीव, अङ्गदादीनाम् उत्सवमूर्तयः तत्रैव प्रतिनित्यं पूज्यमाना भवन्ति। तदर्थमेव अधुनातन कालेपि प्रतिवर्षं श्रीरामनवमी आधारी कृत्य नवम्यां दिने विशेष स्नपन तिरुमञ्जनं, सायंकाले आस्थान पूजाम् आचरन्ति। दशमी दिने श्रीरामसाम्राज्यपट्टाभिषेक महोत्सवपि आचरन्ति। प्रत्येकस्मिन् मासे पुनर्वसु नक्षत्रे श्री रामचन्द्राय सहस्रदीपालङ्कारसेवां, तथैव वार्षिक प्लवोत्सवे प्रथमदिने श्रीसीतारामलक्ष्ण मूर्तीः अपि प्लवे उपावेश्य उत्सवम् आचरन्ति।



## श्रीकोदण्डरामः ओण्टिमिट्ट

त्रेतायुगे दण्डकारण्य नाम्ना प्रसिद्धेस्मिन् प्रदेशे अनेके महर्षयः अत्र तपः आचरन्ति स्म। तेषां यज्ञयागादीनां राक्षसाः आटंकं कुर्वन्तिस्म। तदा ते महर्षयः श्रीरामं प्रार्थितवन्तः। तदा पितृवाक्य परिपालकः श्रीरामः तेषां प्रार्थनाम् अङ्गीकृत्य तं प्रदेशं प्रतिगत्वा राक्षसेभ्यः तान् विमोचयामास। तदा श्रीरामः धनुर्धारी भूत्वा आगतवान् इति कारणेन अयं कोदण्डरामस्वामी इति नाम्ना प्रसिद्धोऽभूत्। एकस्यां रात्रौ रामभक्तेषु अग्रगण्यः जाम्बवान् तस्मिन् प्रदेशे सञ्चरन् किञ्चित् कालं विश्रान्त्यर्थं तत्रैव स्वप। स्वप्ने सीतालक्ष्मण समेत श्रीरामः प्रत्यक्षोभूत्वा तम् अनुगृह्य स्वीयप्रतिमां तत्रैव प्रतिष्ठां कुरु इति आदिदेश। श्रीरामचन्द्रस्य आज्ञानुसारेण जाम्बवान् तत्रस्थं मृकण्डुमुनि साहाय्येन सीतालक्ष्मण समेत श्रीकोदण्डरामचन्द्रम् प्रतिष्ठाप्य, तत् नगरम् एकशिलायां नगरमिति, ग्रामस्य नाम ओण्टिमिट्ट इत्यपि कथितवान्। अत्रस्थ मन्दिरं विविधैः शिल्पैः सुशोभायमाना वर्तते। अयं प्रदेशः कडप चैन्नै राष्ट्रीय मार्गे कडप नगरात् २५ कि.मि. दूरे अस्ति। अत्रस्थ श्रीरामचन्द्रम् आन्ध्र कविषु सुप्रसिद्धः श्रीपोतनामात्यः सम्यक् सम्पूज्य स्वीय विरचित तेलुगु भागवत

## श्रीकोदण्डरामः तिरुपतिः

कलियुग प्रत्यक्षदैवस्य वेङ्कटेश्वर स्वामिनः पादमूले विराजमान तिरुनगरक्षेत्रेऽपि सुप्रसिद्ध श्रीकोदण्डरामस्वामिनः मन्दिरमपि भक्तान् अनुगृह्णत् अस्ति। लङ्कायां रावणासुरं हत्वा श्रीरामः सीता देव्या सह आयोध्यां प्रति प्रस्थितः। श्रीरामचन्द्रम् अनुसृत्य लक्ष्मणः, हनुमान्, सुग्रीवः जाम्बवान्, अङ्गदः च अयोध्यां प्रस्थिताः। मार्गमध्ये तिरुपति नगरे प्रस्तुत विराजमान आलय प्रान्ते किञ्चित् कालं विश्रान्त्यर्थं स्थगिताः इति पौराणिक कथनम्। तदा श्रीरामभक्तः जाम्बवान् सीतालक्ष्मण सहित श्रीरामस्य आलयं निर्मीय देवतामूर्तीः प्रतिष्ठापयामास। अस्मिन् आलये विद्यमान वैशिष्ट्यं किं नाम प्रायशः सर्वत्र राममन्दिरेषु श्रीरामचन्द्रस्य दक्षिणपार्श्वे लक्ष्मणः वामपार्श्वे सीता साध्वी भवति। परं अत्र भिन्नतया विद्यमानो वर्तते। येन दर्शनेन न केवलं इष्टप्राप्तिः अपि च पारमर्थिक सौख्यमपि लभ्यते इति आगम वचनम्।



## श्रीपट्टाभिरामः वाल्मिकीपुरम्

वाल्मीकिपुरे विराजमान श्रीरामचन्द्रः पट्टाभिरामचन्द्रस्वामी इति सुप्रसिद्धः भूत्वा भक्तानां मनः कामं शीघ्रमेव पूरयति इति एकम् ऐतिह्यम्। पुरा आदिकवि वाल्मीकेः प्रार्थनामनुसृत्य भगवान् श्रीरामचन्द्रः यथा तस्य पट्टाभिषेक महोत्सवे भ्रातृभिः सह चक्रवर्तित्वेन सिंहासनाधिष्ठोऽभूत् तथैव तत्र प्रत्यक्षोऽभूत्। वाल्मीकिः भगवन्तं श्रीरामम् एवं प्रार्थयामास ''प्रभो! एवमेव भवान् अत्र अर्चारूपेण स्थित्वा समेषां भक्तजनान् अनुगृह्णातु'' इति। श्रीरामचन्द्रः ''तथैव'' इति उक्त्वा तत्रैव अर्चारूपेण, शिलारूपेण स्थगितः। कालान्तरे जाम्बवता पुनः प्रतिष्ठितः अयं मूर्तिः तदनन्तरं विजयनगर दण्डनायकानां काले महान्तं प्राभवम् अवाप। अयं प्रदेशः तिरुपतिस्थ १०० कि.मि., मदनपल्ली पाट्टणतः २० कि.मि. वर्ति। प्रप्रथम तेलुगु वाग्गेयकारः पदकविता पितामहः इति नाम्ना सुप्रसिद्धाः श्रीताळ्ळपाक अन्नमाचार्यवर्याः अत्रस्थं वीरराघवं विंशत्यधिक सङ्कीर्तनेषु कीर्तयामास।



## श्रीकोदण्डरामः चन्द्रगिरी

चन्द्रगिरौ विद्यमान श्रीरामः श्री कोदण्डराम नाम्ना प्रसिद्धः। अस्य दर्शनेन कुटुम्बसदस्यानां मध्ये अन्योन्यतां प्राप्नुवन्ति इति प्रसिद्धः। एकदा विजयनगर दण्डनायकस्य स्वप्ने श्रीरामचन्द्रः प्रत्यक्षोभूत्वा तस्य प्राभवं प्रकटितवान्। अयं च दण्डनायकः स्वाप्निक वृत्तान्तम् अन्येभ्यः, कर्मकारेभ्यः उक्त्वा मन्दिरं निर्मीय वल्मीकस्थं कोदण्डरामं प्रतिष्ठापयामास। अयं च मूर्तिः यथा वल्मीकपुरे पट्टाभिषेक महोत्सव रूपेण दृश्यते तथैव अत्रापि दृश्यते। परं अन्यदेकः विशेषः किं नाम पादपीठे दक्षिणपार्श्वे गरुत्मान् वामपार्श्वे हनुमान् विराजमानौ वर्तेते। अयं प्रदेशः तिरुपति नगरात् १६ कि.मि. दूरे वर्तते।

श्रीरामचन्द्र चरणौ मनसा स्मरामि।<br>
श्रीरामचन्द्र चरणौ वचसा गृह्णामि।<br>
श्रीरामचन्द्र चरणौ शिरसा नमामि।<br>
श्रीरामचन्द्र चरणौ शरणं प्रपद्ये।।





२८.०१.२०२३ दिनाङ्के तिरुमलक्षेत्रे आयोजित रथसप्तमी तिथौ सूर्यप्रभवाहन सेवायाम् आन्ध्रप्रदेश् प्रभुत्व मुख्यकार्यदर्शी डा.के.एस्.जवहर् रेड्डि, ऐ.ए.एस्. दम्पती ति.ति.दे., तिरुपति संयुक्त कार्यनिर्वहणाधिकारिणी श्रीमती सदा भार्गवी, ऐ.ए.एस्., ति.ति.दे. पालकमण्डलि अध्यक्षस्य सतीमणी, विविध उन्नताधिकारिणः च भागं गृहीतवन्तः।



२८.०१.२०२३ दिनाङ्के तिरुमल क्षेत्रे आयोजित रथसप्तमी उत्सव सन्दर्भे कल्पवृक्षवाहन सेवायां ति.ति.दे. तिरुपति संयुक्त कार्यनिर्वहणाधिकारिणी श्रीमती सदा भार्गवी ऐ.ए.एस्., सि.ए.ओ., श्री शेषशैलेन्द्र, ऐ.आर्.एस्., ति.ति.दे. पालकमण्डलि अध्यक्षस्य सतीमणी, अधिकारिणः च भागं गृहीतवन्तः।



२५.०१.२०२३ दिनाङ्के तिरुचानूरुक्षेत्रे आयोजित रथसप्तमी उत्सव सन्दर्भे सूर्यप्रभावाहने श्रीपद्मावती देवी आगत्य भक्तान् अनुगृहीतवती।



२५.०१.२०२३ दिनाङ्के ति.ति.दे. बर्ड्स् वैद्यशालायां अत्याधुनिक रक्तपरीक्षा केन्द्रस्य प्रारम्भोत्सवं ति.ति.दे. कार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मरिड्डि, ऐ.डि.ई.एस्., कृतवन्तः। अस्मिन् कार्यक्रमे ति.ति.दे. संयुक्त कार्यनिर्वहणाधिकारिणी श्रीमती सदा भार्गवी ऐ.ए.एस्., बर्ड् वैद्यशालायाः प्रत्येकाधिकारिणः डा.रेड्डप्परेड्डि, श्री पद्मावती शिशु हृदयालय वैद्यशालायाः निर्देशकः डा.श्रीनाथ रेड्डि, अन्ये अधिकारिणः वैद्याः च भागं गृहीतवन्तः।



२६.०१.२०२३ तिरुपति परिपालना भवने भारत गणतन्त्र उत्सवेषु जातीयपताकायाः आविष्करणं कृत्वा गौरववन्दनं कृत ति.ति.दे.कार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मरिड्डि ऐ.डि.ई.एस्., अस्मिन् कार्यक्रमे तिरुपति संयुक्त कार्यनिर्वहणाधिकारिणी श्रीमती सदा भार्गवी, ऐ.ए.एस्., श्री वीरब्रह्मम् ऐ.ए.एस्., सि.वि.एस्.ओ. श्री नरसिंह किशोर्, ऐ.पि.एस्., अतिरिक्त सि.वि एस् ओ श्री शिवकुमार् रेड्डि, ति.ति.दे., अन्ये उन्नताधिकारिणः च भागं गृहीतवन्तः।



३१.०१.२०२३ विशाख शारदापीठे ति.ति.दे आयोजित चतुर्वेदहवन पूर्णाहुति कार्यक्रमे विशाख शारदापीठाधिपतिः श्री श्री श्री स्वरूपानन्देन्द्र सरस्वती महास्वामिवर्यः, ति.ति.दे. धर्मकर्तारः, मण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि महोदयाः, अन्ये प्रमुखाः च भागं गृहीतवन्तः।



२१.०१.२०२३ दिनाङ्के तिरुमलक्षेत्रे नारायणगिरि उद्यानवनेषु श्री पुरन्दरदासस्य आराधना महोत्सव दृश्यम्। अस्मिन् कार्यक्रमे कर्णाटका मुळबागळ् श्रीपादराज मठाधिपतिः श्री सुजयनिधि तीर्थस्वामिनः, ति.ति.दे. संयुक्त कार्यनिर्वहणाधिकारिणी श्रीमती सदा भार्गवी, ऐ.ए.एस्., दास साहित्य प्रकल्प प्रत्येकाधिकारी श्री आनन्दतीर्थाचार्यवर्यः अन्ये अधिकारिणः च भागं गृहीतवन्तः।




२७.०१.२०२३ दिनाङ्के ति.ति.देवस्थानम्स् चलद्वाणि 'आप' ति.ति.दे. धर्मकर्तारः मण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि, ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मरिड्डि, ऐ.डि.ई.एस्.,प्रारम्भं कृतवन्तः। अस्मिन् कार्यक्रमे ति.ति.दे. संयुक्त कार्यनिर्वहणाधिकारी श्री वि.वीरब्रह्मम्, ऐ.ए.एस् महोदयः भागं गृहीतवन्तः।







# स्त्रीरत्नम्

- के.जि.महेशः
चरवाणी - ९४८०९०२१३१

चिरञ्जीविन्याः सौभाग्यवत्याः हरिद्रा कुङ्कुमशोभितायाः गर्भसुधाम्बुधौ कन्यारत्नजननम् इति पठामः जातकपत्रिकायाम्। अस्माकं सनातनहैन्दव सम्प्रदाये स्त्रीभ्यः विशेष गौरवं सर्वदा प्रतीयते। 'मातृदेवो भव' इति वेदोक्तिः तां प्रथमपूजार्हां स्तौति। अस्माकं पुराणेषु अपि यदा भगवन्नाम स्वीक्रियते तत्रादौ भगवत्याः नाम एव गृह्यते यथा सीतारामः लक्ष्मीनारायणः, गौरीशङ्करः राधाकृष्णः इत्यादिरूपेण। सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते।

कन्यापूजनं विशेषपर्वरूपेण समाचर्यते। अष्टम्यां तिथौ 'कन्यापूजा' समारोहपूर्वकं श्रद्धाधनैः आचर्यते। अस्मिन् दिने बालाः कन्याः स्वगृहं समाह्वयन्ति। कन्याः विशेषवस्त्राणि धृत्वा सम्प्रदायं विवर्धयन्त्यः गृहसौन्दर्यं वर्धयन्ति, तासां सहोदराणां चिरजीवनं कामयन्ते। बालकाः गौरवरूपेण कन्यानां पादप्रक्षालनं कुर्वन्ति, मधुराणि वितीर्य सुभोज्यं भोजयन्ति। बालकाः बाल्ये यदा एतादृश संस्कारम् आर्जयन्ति ते कदापि अगौरवं न प्रदर्शयन्ति। स्त्री भारतीय संस्कृतौ परमोच्चस्थानम् अलङ्करोति। मनुरपि निगदति

**यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।**
**यत्रैतास्तु न पूज्यन्ते अफलास्तत्राखिलाः क्रियाः।।**

स्त्री स्वस्थसमाजस्य पोषिका, सा स्वस्मृतिशक्त्या स्वकर्तव्यानि सम्यक् पालयति। षष्टेन्द्रियाधिकारिणी सा परेङ्गितमचिरादधिगच्छति। सम्भाव्यमपि आदौ ऊहयति। आपत्सु तस्या दृढता पुरुषस्य साहसं वर्धयति। सा कृपायाः सहनशीलतायाः मातृमूर्तिः।

'कन्या' इति शब्दः 'नी दीप्तौ' इत्यस्मात् व्युत्पन्नः। या प्रदीपयति कुलं सा कन्या। सा गृहस्य भूषणं भवति। स्त्री गृहं प्रदीपयति, सा महाभाग्या अर्थात् गृहस्य भाग्यं वर्धयति, स्वकौशलेन गृहशान्तिं समुल्लासयति। यत्र स्त्री हसति तत्र श्रीः विलसति। अत एव सम्यक् प्रोक्तं -

**न गृहं गृहमित्याहुः गृहिणी गृहमुच्यते।**

यः पति स्वभार्यायाः मर्यादां रक्षति सः स्वगृहस्य सौभाग्यं परिवारस्य पवित्रतां च रक्षति।

पुरुषः स्त्रीं विना अपूर्णः भवति। तां विना सः धार्मिक होमहवनादिकं कर्तुम् अधिकारी एव न भवति। पुरुषस्य पुरुषार्थसाधिका स्त्री भवति। स्त्रीशक्तिस्वरूपिणी सा धर्मस्य संरक्षिणी च। गृहस्थाश्रमः अनया एव धन्यतां याति। सा सन्तानदात्री कुलगौरववर्धिनी भवति। स्त्रियः प्रकृत्या पण्डिताः भवन्ति इति कालिदासः कथयति।

गृहकल्याणाय पुत्री, भार्या, माता इति रूपाणि धारयति। पुत्री सौभाग्यवतः गृहे एव जायते। दशपुत्रसमा भवति पुत्री। न कोऽपि पुत्रीव प्रीणाति पितरम्।

भार्या, सहधर्मचारिणी अर्धाङ्गिनी, वामा चेति प्रथिता। तां विना संसाररथः न सरति। नाथस्य हृदयभागमधितिष्ठति तस्मात् 'वामा' इत्यापि श्रूयते। सुभाषितवचनं यत्-

ज्योत्स्नां विनापि निवसेत् निशि शीतभानुः
छायां विनापि विलसेत् दिवसेश्वरोऽपि।
एनां विना रघुपतिः परिगृह्य धैर्यं
सप्राण एव वसतीति विचित्रमेतत्।।

शशी ज्योत्स्नया शोभते, ज्योत्स्नापि शशिना शोभते। सूर्यः सर्वदा छायासहितः एव भवति।

सूर्यस्य छायां विना, चन्द्रस्यापि ज्योत्स्नां विना दर्शनम् असम्भवम्। एतदसम्भवमपि कदाचित् सम्भवेत् परन्तु पुरुषोत्तमः गुणोत्तमः रामः सीतां विना स्वप्राणान् कथं धरति इति विचित्रम्। भारतीय कुटुम्बव्यवस्थायां सतीपत्योः परस्परप्रीत्यनुरागः विशेषरूपेण चित्रितः। अतः 'धन्यो गृहस्थाश्रमः' इति कथ्यते।

परन्तु धर्मान्तरसम्भ्रान्तचित्ताः निगदन्ति यत् हैन्दवा स्त्रीपीडकाः ते शिशुहत्यां कुर्वन्ति ते कदापि पुत्रीं पुत्रवत् न पश्यन्ति, भार्यायै समानाधिकारान् न प्रयच्छन्ति इति। आधुनिकाः युवानः एतादृशकथनानि मनागपि न स्वीकुर्युः। धर्मः सर्वदा हितमेव ब्रूते। ''**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः**'' इति गीतावचनं मनसा पालयन्तु। स्त्रीरत्नानि रक्षामः, पालयामः, पोषयामः, पूजयामः, आराधयामः।

'अहल्या द्रौपदी तारा सीता मण्डोदरी तथा।
पञ्चकन्याः स्मरेन्नित्यं महापातकनाशनम्।।'



## नागुलापुरम्
## श्रीवेदनारायणस्वामिनः प्लवोत्सवाः

नागुलापुरं श्रीवेदनारायणस्वामिनः अस्मिन् संवत्सरे पञ्चदिनानि मार्च् २४ तः २८ दिनाङ्क पर्यन्तं सूर्यसेवाम् आचरन्ति।

सायंकाले पञ्चवादने अयोज्यमान अस्यां सूर्यसेवायां ध्वजस्तम्भः, बलिपीठं च मध्ये न आगच्छतः। सूर्यकिरणाः अद्ययोः द्वयोः दिनयोः पादौ, अनन्तरं नाभिम्, अन्तिमयोः द्वयोः दिनयोः मुखारविन्दं स्पृष्ट्वा सेवां कुर्वन्ति। अस्य दृश्यस्य वीक्षणार्थं अशेष सङ्ख्याकाः जनाः आगच्छन्ति।

अस्यां सूर्यसेवायां प्लवोत्सवाः अपि भवन्ति। प्रथमे दिने श्रीसीता समेत रामचन्द्र स्वामिनं, द्वितीय दिनतः पञ्चम दिन पर्यन्तं श्री वेदवल्ली समेत श्री वेदनारायणस्वामिनः अयोज्योन्ते। इमे ब्रह्मोत्सवाः तिरुमल ब्रह्मोत्सवक्रमे एव अयोजयन्ति। मत्स्य -जयन्तीं (२४.०३.२०२३) अपि विशेषेण आयोजयन्ति।


**SAPTHAGIRI**

**STATEMENT ABOUT OWNERSHIP AND OTHER PARTICULARS ABOUT**

(MONTHLY)
FORM IV
See Rule 8

| | | |
|---|---|---|
| 1. Place of Publication | : | TIRUPATI |
| 2. Periodicity of its Publication | : | Monthly |
| 3. Printer's Name | : | Sri P. Ramaraju, M.A. |
| Whether citizen of India | : | Yes |
| Address | : | S.O.,T.T.D.Press Compound, K.T.Road, Tirupati. |
| 4. Publisher's Name | : | Dr. K. Radha Ramana, M.A.,M.Phil., Ph.D. |
| Whether citizen of India | : | Yes |
| Address | : | Chief Editor Office, T.T.D.Press Compound ,K.T.Road, Tirupati. |
| 5. Editor's Name | : | Dr. V.G.Chokkalingam, M.A., Ph.D. |
| Whether citizen of India | : | Yes |
| Address | : | Chief Editor Office, T.T.D.Press Compound ,K.T.Road, Tirupati. |
| 6. Name and address of individuals who own the News paper and partners or share holders holding more than one percent of the Total Capital | } | Tirumala Tirupati Devasthanams |

*I, K. Radha Ramana, hereby declare that the particulars given above are true to the best of my knowledge and belief.*

TIRUPATI
Date : 28-2-2023

(Sd.) Dr. K. Radha Ramana
*Signature of the Publisher*

२

# प्रस्तुतिः

- कन्दाल लक्ष्मीनारायणः
चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

उभयवेदान्तार्थवेदिभिः रघुनाथदेशिकचरणैः विरचितायामस्यां स्तुत्याम् अनेके वेदान्तरहस्यार्था गूढतया निबद्धा वर्तन्ते। मुमुक्षो र्जीवस्य स्वप्रयत्नेन भगवत्प्राप्ति स्सुदुर्लभा। इयं स्वगत स्वीकार इत्युच्यते। अथ 'यमेवैष वृणुते तेन लभ्यः' (मुण्डक) इति श्रुत्युक्तरीत्या यदि भगवता स्वयं जीवोऽनुगृहीतश्चेत् तस्य मुक्तिस्सुप्रापैव। इयं परगत स्वीकार इत्युच्यते। अत्र स्वगतस्वीकारविधेः परगत स्वीकारऽवश्यफलक इति तस्य वरीयस्त्वम् उपादेयतरत्वं च। अयं च सम्प्रदायरहस्य भूतोऽर्थः। अयमेवार्थविशेष आचार्यपादैः कदा मां त्रातुमायास्यसिं च इति निजरक्षणं तत्कृपैकाधीनमिति सूचितः।

लोके प्राकृतविषयानुभवमिच्छतां जनानां तत्तद्वस्तु विषयकं ज्ञानमावश्यकम्। अन्यथा ते तान् न भुञ्जेरन्। तथैव मुक्तिमिच्छतामपि चेतनानां पदार्थपञ्चकज्ञानम् आवश्यकम्। तच्च स्वस्वरूप परस्वरूप फलस्वरूप उपायस्वरूप विरोधिस्वरूपरूपम्। तदेव अर्थपञ्चकज्ञानम् इत्युच्यते श्रीवैष्णवसम्प्रदाये। तदुक्तम् -





प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः।
प्राप्त्युपायं फलं प्राप्तेः तथा प्राप्तिविरोधि च।
वदन्ति सकला वेदास्सेतिहासपुराणकाः।
मुनयश्च महात्मानो वेद वेदान्त वेदिनः।।

हारीतस्मृतिः८.१४१.

तदेतदत्र सम्यक् दर्शितं गुरुचरणैः - यथा -

I. प्राप्यस्य परमात्मनः स्वरूपम् - जगज्जन्मादि कारणत्वं श्रियःपतित्वम्, मोक्षप्रदातृत्वम्, अन्तर्यामित्वम्, आश्रितरक्षकत्वं, कल्याणगुणाकरत्वमित्यादि पुरुषोत्तमस्य ब्रह्मणस्स्वरूप बहुशो निरूपितम्। तत्र च परमपुरुषस्य पर, व्यूह, विभव, अन्तर्यामि, अर्चास्वरूपाणि निदर्शितानि - यथा

१.परस्वरूपम् -

श्लो. १. विस्तृणीत कमलापति... यं समस्त जगदेक कारणम्।

श्लो.१९.शरणी... तरणीन्दुलोचनभृतः... वरणीय सद्गुणनिधेः।

श्लो.३७.धृताखिल जगद्भरोऽप्यविजहत् स्वकं तानवम्।

२.व्यूहस्वरूपम् -

श्लो- ३६.जातं जगत्सृष्टिकरस्थ धातुरुत्पत्तिहेतु र्जलजं यदत्र।

३.विभवस्वरूपम् -समस्त जगतामित्यादि विंशतिश्लोक्या अवतारवैभवो वर्णितः।

४. अन्तर्यामिस्वरूपम् -

श्लो. ५७. विस्मृत्यशेषगिरिनाथ! हृदिस्थितं त्वाम्

५.अर्चास्वरूपम् -

श्लो.१. स्वस्ति शेषगिरि मस्तभूषणम्..

श्लो. ५.शेषशैलमधिरुह्य दीप्यते... परः पुमान्...

श्लो.१२.श्रीदेव्याः... वृषमहाभूभृद्विहारोत्सुकौ...

१. श्लो.१९ शरणीकृताहि धरणीधरस्य तरणीन्दु लोचन भृतः।

अत्राय मवधेयः - स्तोत्रे सर्वत्र शेषाद्रौ अवतीर्णस्य स्वामिनः अर्चास्वरूपे एव परत्वादि चतुष्टय स्वरूपवैभवोऽनुभूत इति। अयं च दिव्यसूर्यनुभवानुगतो विलक्षण स्सम्प्रदायविशेषः।

II. प्राप्तुः चेतनस्य स्वरूपम् - बद्धस्य मुमुक्षोः, नित्यस्य जीवस्य स्वरूपम्।

श्लो. ५७.हित्वा त्वदीय पदपङ्कज..

श्लो. ५८. त्वद्दत्त मिन्द्रिय... भवतोऽपि न हि स्मरामि।

श्लो. ५९. उद्घूष्य भक्तनिवहं कटुभि र्वचोभिः...

III. उपायस्वरूपम् -

श्लो.१७ आश्रित्य यत्पदसरोजयुगं बुधानाम्...

श्लो.१९. शरणं व्रजामि चरणद्वयम्...

श्लो.२१. शुभतर मुपयातु ते पादयुग्मं दृढालानताम्।।

IV. फलस्वरूपम् -

श्लो. १४. मोक्षाभिख्यं सैषदुद्यात् पुमर्थम्।।

श्लो.२४ त्वत्सान्निध्यं देहि देहावसाने।।

V. विरोधिस्वरूपम् -

श्लो.१८. अनश्वरवयस्स्फुरतत्रिदशवारयोषिद्धतां
न शक्रपदवीं न च क्षितितलाधिपत्यं वृणे।

श्लो.४३.पापौघानां विपाकं प्रशमयतु मयि प्रत्यहोदित्वराणाम्।।

इत्थं सरलगभीरे भक्तिनिर्भरेऽस्मिन् स्तोत्ररत्नाकरे बहुविधानि रम्याणि रत्नानि विचेतृभिरासज्यन्ते।

विद्वन्नुतशेमुषीविभवानां परम भक्तानाम् अस्मदाचार्यचरणानां शास्त्र सम्प्रदाय रहस्यार्थसान्द्रायां कृतावस्यां तदीयं हार्द मनुभाव मवगन्तुं न पारयामि। परन्तु सूक्तिरियं मम गुरोरिति प्रीत्या केवलं, यथामति विवरीतु मुत्सहे। ममायं प्रयास स्सचेतसां विपश्चितां चेतांसि सादर मामोदयतीति विश्वसिमि।।

श्लो- कलित विविध वर्ण स्फारचित्रस्वरूपा
सुरुचिरमहितार्थव्रात सौगन्ध्यपूर्णा।
बुधनुतरघुनाथाचार्यवर्यप्रणीता
लसति वृषगिरीशप्रस्तुतिः कण्ठमाला।।

(अनुवर्तिष्यते)



# मत्स्यावतारः

तेलुगु मूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.द्वारकानाथः
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८७४३१५०८३३

प्रळयकाले ब्रह्मदेवः योगनिद्रायाम् आसीत्। तदा सः तस्य चतुर्मुखेभ्यः वेदाः पतिताः। ते शिशवः इव रोदितवन्तः। तत् रोदनं श्रुत्वा सोमकासुरः जलात् बहिः आगतवान्




जलात् बहिरागत सोमकः वेदान् चोरयति स्म। तान् जलान्तर्भागे निक्षिप्तवान्। निद्रातः उत्तिष्ठवान् ब्रह्मा...

अरे! मम वेदाः कुत्र? के अचोरयन्?



‘सृष्टिकार्यं प्रारम्भं कुरु’ इति अवदत् विष्णुः। झटिति ब्रह्मा

वेदान् विना सृष्टि कार्यं न कर्तुं शक्नोमि प्रभो!

विष्णुः दिव्य दृष्ट्या पश्यति।

सोमकः चोरितवान् ब्रह्मन्!











तयोः मध्ये घोरयुद्धं जातम्। अन्तिमे चक्रायुधेन सोमकं हतवान् विष्णुः।








# बालविनोदिनी

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?







## रसप्रश्नाः

१. कुम्भसम्भवः कः?

२. द्वैवमतस्थापकः कः?

३. रघुवंशस्य कर्ता कः?

४.नाटक चक्रवर्ती कः?

५.नाट्यशास्त्रं कस्य कृतिः?

६. लक्ष्मीविष्णोः पुत्रः कः?

(समाधानानि - १. द्रोणः २. मध्वाचार्यः ३. कालिदासः ४. भासः ५. भरत मुनेः ६. मन्मथः )



भेदाः कुत्र?



(१.पुष्पस्य उपरि चित्रपतङ्गः, २. अधः एकं पुष्पम् ३. चूडामण्याः हारः ४.कर्णे आभरणम् ५. नासिकाभरणम् ६. हस्ते एकं कङ्कणम् ७. पुष्पतोरणम्।)



# लघुप्रश्नोत्तरी



ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः
यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः!
प्रतिमासं इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. देवक्याः पिता कः?
२. पूर्व जन्मनि गजेन्द्रः कः आसीत्?
३. बलरामस्य माता का?
४. लक्ष्मणस्य भार्या का?
५. हनुमतः राजा कः?
६. हिन्दू धर्मस्य निज नाम किम्?
७. हिन्दू पुराणानुसारं सृष्टिकर्ता कः?
८. ''सत्यमेव जयते'' इति सूक्तिः कस्याः उपनिषदः?
९. विद्यायाः अधिदेवता का?
१०. गाङ्गेयः इति कं कथयन्ति?
११. महाभारतस्य निजनाम किम्?
१२. कर्णस्य अपरं नाम किम्?
१३. भीष्मस्य पिता कः?
१४. भीष्मस्य गुरुः कः?
१५. वेदव्यासस्य माता का?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं **The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507,** प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः **(Xerox)** नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः **(Subsribers)** भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवन्तां त्रयाणां बालानां चयनं **DIP** द्वारा क्रियते।
६. विजेतॄणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. **Chief Editor** कार्यालयीयकार्यकर्तृपुत्रपत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।

**Subscription Number** :
**Name** :
**Mother** :
**Father** :
**Address** :
**Phone Number** :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road, Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

तिरुमल श्रीवेङ्कटेश्वरस्वामिनः प्लवोत्सवः
(२०२३, मार्च् ०३ तः ०७ पर्यन्तम्)




तिरुमल श्रीवेङ्कटेश्वरस्वामिनः प्लवोत्सवः
(२०२३, मार्च् ०५ तः ०७ पर्यन्तम्)

SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-02-2023 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.



# नागुलापुरम्
# श्रीवेदनारायणस्वामिनः प्लवोत्सवः
(२०२३, मार्च् २४ तः २८ पर्यन्तम्)